कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-
श्रीमद्वेङ्कटनाथवेदान्तदेशिकस्वामिविरचितं

# पादुकासहस्रम्

(हिन्दीव्याख्याविभूषितम्)



सम्पादकाः

जगद्गुरुरामानुजाचार्यश्रीवासुदेवाचार्य-
'विद्याभास्कर' महाराजाः

न्यायशास्त्रश्लाघ्यविधाननैपुणहृत्पात्रविद्यावितीर्णकौतुक-
पण्डितप्रकाण्डाचार्यवर्यश्रीमत् प्रो० वशिष्ठत्रिपाठि-
पूज्यपादानां करकमलयोः सादरम् —

5.1

कमलाकान्त त्रिपाठी
२६.६.२०१०

श्रीमते रामानुजाय नमः  श्रीवादिभीकरमहागुरवे नमः

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-
श्रीमद्वेङ्कटनाथवेदान्तदेशिकस्वामिविरचितं

# श्रीरङ्गनाथपादुकासहस्रम्

*सम्पादकाः*

अनन्तश्रीविभूषितजगद्गुरुरामानुजाचार्यश्रीवासुदेवाचार्य
'विद्याभास्कर' महाराजाः

*व्याख्याकारः*

कृष्णनारायणाचार्यः
(डॉ. कमलाकान्तत्रिपाठी)
अध्यक्षचरः, मीमांसाविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

प्रकाशक
श्रीकोसलेश सदन
कटरा, अयोध्या, जनपद फैजाबाद
(उ.प्र.)-२२४१२३
२०१०

*पुस्तकप्राप्तिस्थान—*
**श्रीकोसलेश सदन**
कटरा, अयोध्या, जनपद फैजाबाद
(उ.प्र.)-२२४१२३







**प्रथमसंस्करण :** मेषसंक्रान्ति हरिद्वारमहाकुम्भ वैशाखी अमावस्या,
वि.सं. २०६७
२००० प्रतियाँ



**मूल्य :** ३००.००



मुद्रक—
**श्रीजी प्रिण्टर्स**
नाटी इमली, वाराणसी
फोन नं. : 0542-2201104, 3257329
ई-मेल : shrijeeprint@gmail.com
shrijeeprint@sify.com

# समर्पण

अशेषश्रीवैष्णवकुलानुगृहीतनित्यवैकुण्ठवासि-श्रीवासुदेवसोमानी एवं अ.सौ. श्रीमंतीकेशरदेवी सोमानी की परमपुण्यस्मृति में प्रकाशित, एवम्—

अखिलभारतीयश्रीवैष्णवकुलकमलदिवाकराशेषवेदवेदाङ्गविद्वद्वरिष्ठगोष्ठीगरिष्ठोभयवेदान्तमार्त्तण्ड, प्रतिवादिवाग्वैदग्ध्योन्मूलनपटीयान्, शब्दशास्त्रावारपारीणकवितावनितापुण्डरीकसौरभ्यवितरणनदीष्णश्रीकोशलेशसदनपीठाधीश्वराशेष यशःपटहप्रणादितदिग्दिगन्तानन्तश्रीसमलङ्कृत विश्वाराध्यजगद्गुरुरामानुजाचार्यवासुदेवाचार्यजी महाराज की स्वर्णजयन्ती एवं 'जगद्गुरु' पदवी के निर्वहण की रजतजयन्ती के शुभ अवसर पर श्रीमज्जगद्गुरुरामानुजाचार्योभयवेदान्तमार्तण्ड-स्वामिवर्यप्रातःस्मरणीयपदप्रवालश्रीमद्रामनारायणाचार्यजी महाराज के करकञ्जों में सादर समर्पित :—

कृष्णनारायणाचार्य
**(डॉ. कमलाकान्त त्रिपाठी)**
*व्याख्याकार*

॥ श्रीमते रामानुजाय नमः ॥ Ph. No. : 044-27268718



॥ श्रीमद्वरवरमुनये नमः ॥ ॥ श्रीवादिभीकरमहागुरवे नमः ॥

HIS HOLINESS JAGADGURU GADI SWAMI

**SRIMAD P.B. SRINIVASACHARYA SWAMI**

SRI PRATIVADI BHAYANKARMUTT, No. 31/13, Sannidhi Street,
KANCHEEPURAM-631503 (Tamilnadu)

**श्रीकाञ्चीप्रतिवादिभयङ्करमठाधीश्वराः**

**श्रीभगवद्रामानुजसत्सम्प्रदायाचार्याः जगद्गुरुगादीस्वामि-**

**श्रीमच्छ्रीनिवासाचार्यस्वामिनः**

श्रीप्रतिवादिभयंकर मठ, ३१/१३, सन्निधि वीथी,
कांचीपुरम्–६३१५०३ (तमिलनाडु)

Camp : .................. Date : ....................

श्रीवेदान्ताचार्यस्य कवितार्किकसिंहस्य 'अनाघ्रातावद्यं बहुगुणपरीणाहि मनसो, दुहानं सौहार्दं परिचितमिवाथापि गहनम्। पदानां सौभ्रात्रादनिमिषनिषेव्यं श्रवणयोः' इत्यादिप्रशंसाप्रथमलक्ष्यभूतं वाणीविलसितं हि पादुकासहस्रम्। दयां स्तुवन्नाचार्यः श्रुतिस्मृतीतिहासपुराणश्रीपाञ्चरात्रदिव्यप्रबन्धगूढार्थगर्भितं श्रीवेङ्कटेश-भगवतो वैभवं यथा प्राचीकशत्, तथैव पादुकां स्तुवन् भगवतो रङ्गनाथस्य महिमानं प्रकटीचकार। 'प्रशस्तिस्सा राज्ञो यदपि च पुरीकोशकथनं' इति कविपन्थाः।

महदिदं प्रमोदस्थानं यत् एतादृशपरमगभीरस्तोत्रस्य, विद्याभास्करोपाधि-भूषितस्य अयोध्याकोसलेशसदनाध्यक्षस्य जगद्गुरुरामानुजाचार्यवासुदेवाचार्यस्य सत्प्रेरणया तच्छिष्येण कृष्णनारायणरामानुजश्रीवैष्णवदास इति दास्यनामविभूषितेन श्रीमत्कमलाकान्तत्रिपाठिमहाशयेन विरचितहिन्दीव्याख्यासहितस्य प्रकाशनम्। प्रेरकेभ्यः व्याख्याकर्तृभ्यश्च मङ्गलान्याशास्महे।

इति

प्र. गादि. श्रीनिवासाचार्यः

प्र.गादि. श्रीनिवासाचार्यः

Sri :

Srimathe Ramanujaya Nama :



# SRI VANAMAMALAL MUTT

## NANGUNERI-627 108

Srimath Paramahamsa Jagadguru
Sri Kaliyan Vanamamalai Ramanuja Jeer Swami

E.mail : varamangai 2001@yahoo.com
Fax : 04635-250636
Ph : o4635-250159 (Personal)
: o4635-250119 (Office)

Place : NANGUNERI

Date : 11-3-10

।।श्रीः।।

।।श्रीमते रामानुजाय नमः।। श्रीमद्वरवरमुनये नमः।।

।।श्रीवानमहाचलमुनिभ्यो नमः।।

## ।। मङ्गलाशासनवार्ता: अभिनन्दनञ्च ।।

अयि भोः विपश्चिदपश्चिमाः, अन्तर्वाण्यग्रेसराः, अस्मदीय सत्सम्प्रदाय-भगवद्रामानुजदर्शन-निकषायमाणधिषणाः महामनीषिणो महानुभावाः श्रीवैष्णवशिखामणयः, विदित्वेमं विषयं भृशं मोमुद्यते मानसमस्माकं यदस्माकं परमाप्तविद्वद्वरेण्यानां श्रीमतां विद्याभास्करवासुदेवाचार्याणां परमान्तरङ्गान्तेवासिवर्यैः श्रीमद्भिः कमलाकान्तत्रिपाठिभिराचार्यवितीर्णश्रीकृष्णनारायणशुभसंज्ञैः वाराणसी-क्षेत्रीयसम्पूर्णानन्दविश्वविद्यालयमीमांसाशास्त्रविभागाध्यक्षैः विद्वद्वरैः, सर्वतन्त्रस्वतन्त्राणां कवितार्किकसिंहानां श्रीवेदान्तदेशिकस्वामिनां श्रीपादुकासहस्रग्रन्थतल्लजस्य भारतराष्ट्रभाषायां हिन्द्यां व्याख्या विरच्यमानास्ति, प्रकाशनञ्च नीयेतातिशीघ्रमिति।

प्रियतमा आत्मबान्धवाः, श्रीपादुकासहस्रस्तुतिमतल्लिका-मल्लिकोद्यानवनस्य परमानुभाव्यसुगन्धप्रसारणस्य दिक्षु विदिक्षु सर्वास्वपि समीचीनव्याख्याद्वारा विशिष्य हिन्दीभाषाव्याख्यया

नातिसुलभः प्रयत्नोऽयमेतेषां प्राचार्यवराणां श्रीकृष्णनारायणविदुषां परमप्रशस्यो बोभवीत्विति हार्दं वयमाशास्महे।।

## हिन्दी में सम्मति

प्रियों व मान्यों, आगे हम कतिपय शब्द हिन्दी में भी लिखना चाहते हैं, क्योंकि हिन्दीव्याख्याकार व उनकी हिन्दीव्याख्या के प्रति लिखने का यह जो सन्दर्भ पाया है, उस कारण से। श्रीवेदान्तदेशिक स्वामीजी के अनुत्तम और अतुल्य पाण्डित्यप्रकर्ष को तो सभी विद्वन्मणि श्रीवैष्णव लोग ही नहीं समग्र पण्डितप्रकाण्डबृन्द खूब जानता है। उनके प्रारम्भकालिक श्रीहयग्रीवस्तोत्र में—'मनोगतं पश्यति यस्सदा त्वां मनीषिणां मानसराजहंसम्। स्वयं पुरोभावविवाद-भाजः किङ्कुर्वते तस्य गिरो यथार्हम्'—इति श्लोकभावस्य, "अपि क्षणार्धं कलयन्ति ये त्वामाप्लावयन्तं विशदैर्मयूखैः। वाचां प्रवाहैः अनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते।" इति श्लोकभावस्य च त एव आचार्यवर्या लक्ष्यभूता व्यराजन्त। अविदितस्वपाण्डितीमहिम्नो जनानवबोधयितुं, स्वस्मिन् श्रीहयवदनपरब्रह्मणस्सकलविद्याधिदैवत-दिव्यानुग्रहपरिपूर्णपात्रताञ्च प्रकटयितुम्—फलश्रुतिपद्ये 'वागर्थसिद्धि-हेतोः पठत हयग्रीवसंस्तुतिं भक्त्या। **कवितार्किककेसरिणा** वेङ्कटनाथेन विरचितामेताम्।।" इति स्वप्रशंसां स्वयमेवाकुर्वन्। प्रियतम आत्मबन्धुओं, हिन्दी में कुछ लिखने की इच्छा प्रकट करते हुए इस रामानुजदास की लेखनी से यादृच्छिक रूप से गैर्वाणी में लिखने का प्रयत्न बन गया। इसे आप मणिप्रवालसंयोग के रूप में स्वीकार करें। अब हिन्दी में ही आगे चलते हैं।

प्रियों, यद्यपि 'श्रीपादुकासहस्र' एक श्रेष्ठ स्तोत्रग्रन्थ है, तथापि श्रीवेदान्तदेशिकस्वामी का 'यादवाभ्युदय' के जैसे एक काव्य भी है। यह श्रीदेशिकस्वामी की अपार आशुकवित्वशक्ति की कीर्तिपताका के रूप में जाज्वल्यमान है, क्योंकि स्पर्धा में परिपूर्ण विजय स्वामी ने एकमात्र रात्रि के अवकाश में इस कृति की रचना से प्राप्त की थी। उपलक्षणमर्यादा से हम इस 'पादुकासहस्र' काव्य में

श्रीवेदान्तदेशिकाचार्य स्वामी जी के विस्तारकवित्व, मधुरकवित्व, चित्रकवित्व की शक्तियों की भी खूब झाँकियाँ पाते हैं। चतुष्कवित्वसामर्थ्ययुक्त श्रीपरकालदिव्यसूरिसाम्य का अनुभव कर के अत्यन्त आनन्दित होते हैं। प्रियतमो, जैसे इतिहास-पुराण काव्यों में काण्ड-पर्व-अध्यायादि विभागों में विभक्तता दिखायी पड़ती है, वैसे इस 'पादुकासहस्र' में 'पद्धति' नामों से विभजन दृष्टिगोचर है। 'प्रस्तावपद्धति' से लेकर 'फलपद्धति' तक बत्तीस (३२) विभाग हैं। इस 'पद्धति' नाम को सुनकर हमारे हृदय के अन्दर यह प्रतीति पैदा होती है कि पद्धति-माने-पथ-या मार्ग, बाकी कवियों के कृति-रचना-तरीके से श्रीदेशिकाचार्यस्वामी का ढंग विलक्षण रूप से भिन्न है, यह 'मुरारे स्तृरीयः पन्थाः' वचन की याद दिलाता है। 'अनर्घराघव' नाटकरत्नरचयिता श्रीमुरारि महाकवि के बारे में यह विद्वज्जनोक्ति प्रचलित है। 'अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुः जानाति मन्थाचलः' श्रीमुरारि का पद्यांश है। आत्मीय रचनाप्रणाली काव्यगाम्भीर्यमर्मस्पर्शी जो है उसी को सूक्ष्मरूप से प्रगट किया है। (श्रीवेदान्तदेशिकस्वामिनां प्रप्रथमायां प्रस्तावपद्धत्यां) श्रीवेदान्तदेशिकस्वामिवर्य की प्रप्रथम'प्रस्ताव पद्धति' में प्रारम्भिक मङ्गलाचरण श्लोक—

'सन्तः श्रीरङ्गपृथ्वीशचरणत्राणशेखराः।
जयन्ति भुवनत्राणपदपङ्कजरेणवः।।'

भगवत्कृपा से भागवतकृपा का उत्कर्ष प्रकाशित करता हुआ, हमारे श्रीवैष्णवसम्प्रदाय का सिद्धान्त दिखाता है। सद्यः द्वितीय पद्य में —'भरताय परं नमोऽस्तु तस्मै प्रथमोदाहरणाय भक्तिभाजाम्। यदुपज्ञमशेषतः पृथिव्यां प्रथितो राघवपादुकाप्रभावः।।'— भगवद्दिव्यपादुकाप्रभाव को सारे जग के प्रति सम्बोधन करने वाले, अत्युत्कृष्ट भगवत्पारतन्त्र्य महागुण के श्रेष्ठ निधान कैकयीपुत्र भरत को कृतज्ञतापूर्वक प्रणाम समर्पित किया है। यह श्री वेदान्त देशिकस्वामी के ही अत्यद्भुत 'रघुवीर गद्य' का—'प्रणतभरत-

मुकुटतटसुघटितपादुकार्याभिषेकनिर्वर्तितसर्वलोकयोगक्षेम' वचन का स्मरण कराता है। महाशयों, अन्तरवगाह्यभावाभिबोधन यदि हम सम्प्राप्त करतें हैं, तब स्वामी वेदान्तदेशिक जी के भगवद्रामानुजसिद्धान्तनिर्धारकत्व के प्रभाव का पूर्णानुभव कर सकते हैं। प्रियों, अन्तिम फल-पद्धति में ग्रन्थनिगमन—'जयति यतिराज-सूक्तिः जयति मुकुन्दस्य पादुकायुगली। तदुभयधनाः त्रिवेदी—मवन्ध्ययन्तो जयन्ति भुवि सन्तः॥' परम माङ्गलिक रूप में करके काव्यसमापन किया है आचार्यवर्य ने। इस श्लोक को पढ़कर हमारे मन में ऐसा विचार उठता है कि सदियों बाद कोई त्रिवेदी/त्रिपाठी/तिवारी जनसाधारण भाषा में माने—हिन्दी में व्याख्या रच के अपने को धन्य बनाकर सज्जन-समुदाय को भाग्यशाली बनाकर लोकोपकार करने वाला है—भविष्यवाणी निकली है। इसके फलस्वरूप अब/अधुना यह श्रीवेदान्तदेशिकस्वामी का दीर्घदर्शीवचन हमारे श्रीकृष्णनारायण अपरनामधेय **श्री कमलाकान्त त्रिपाठी** द्वारा फलेग्रहि सम्पन्न हो रहा है। हमने स्थालीपुलाकन्याय के अनुसार ग्रन्थप्रभाव दिखाने वाले एकाध उद्धरण दिये हैं। वाचक महानुभाव लोग इनसे प्रेरणा पाकर यदि सव्याख्य 'श्रीपादुकासहस्र' का अध्ययन करें तो वे भगवद्—भागवताचार्य के प्रसाद के परिपूर्ण लक्ष्य बन कर निश्चप्रच विराजेंगे। हमने अब तक व्याख्याग्रन्थ की मुद्रणपूर्वीय प्रति नहीं देखी है। तथापि मुद्रणकैंकर्य को यथाशीघ्र सम्पन्न करने की अभिलाषा जो प्रकट की है हमारे परमाप्त सुहृद्वर श्रीविद्याभास्कर वासुदेवाचार्य स्वामी ने उसकी पूर्ति करने का अपना कर्तव्य निभाने के वास्ते यथामति व यथाशक्ति यह वार्ता लिखी है। 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख-भाग्भवेत्॥' शुभमेव भूयात् सर्वदा सर्वथा सर्वत्र॥

श्रीरामानुजन

**(श्रीकलियन् वानमामलै रामानुज जीयर स्वामी)**

श्रीमते रामानुजाय नमः  श्रीवादिभीकरमहागुरवे नमः

**अनन्त श्री विभूषित जगद्गुरु रामानुजाचार्य वेदान्तमार्तण्ड यतीन्द्र-स्वामिरामनारायणाचार्यकृपापात्र जगद्गुरु रामानुजाचार्य स्वामी वासुदेवाचार्य जी महाराज 'विद्याभास्कर'**

**अध्यक्ष**

**कोसलेश सदन धर्मादाय (ट्रस्ट)**

## ।। प्रसादप्रसूनम् ।।

**प्रतिक्षणोत्पन्नकवीन्द्रसंस्तुतिः सुरक्षितस्थावरजङ्गमस्थितिः।**
**अशेषशेषैकगतिर्मतौ च मे चकास्तु नारायणपादयोर्द्युतिः।।**

**लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।**
**अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।।**

लोके तावत् सकलपरमर्षिसमादरणीयापौरुषेयपदकदम्बकरूपा निगमास्तदेकमूलाः स्वर्गादिप्रयोजनकालौकिकोपायताप्रतिपादनपराः स्मृत्याचारपरम्परा यंदधिगमनाय यदद्भुतप्रभाप्रसाराय यदन्तरूर्क्-समुज्जृम्भणाय यदुद्दामदृष्टिविवर्धनाय प्रवर्तन्ते यत्कृते चाग्निष्टोमोक्थ्यषोडश्यतिरात्राप्तोर्यामात्यग्निष्टोमवाजपेयाश्वमेधाहीनसत्रात्मानो महायागा इज्यन्ते गाणपतपाशुपतपञ्चरात्राद्यागमोदिताः सदाचाराश्च गृह्यन्ते प्रहीयन्ते चानादिमायावशोन्मिषितकदाचारास्तदाचरणापादि-तदुरितभियाऽनुष्ठीयन्ते वा शुद्धिविधायिनः प्रायश्चित्तप्रकारास्तत्सर्वं संपरिगृह्य प्रादुर्भूतानां कवितार्किकसिंहश्रीमन्निगमान्तदेशिक-वेङ्कटनाथार्यमहास्वामिनामन्तर्मानसविराजमानश्रीमद्भगवत्तत्परिच्छदरति-विशेषपरिणामभूतं **श्रीमद्भगवत्पादुकासहस्राभिधं** श्रीनारायणवक्षः-स्थलविभ्राजमानकौस्तुभाख्यमहामणिसध्रीचीनं विश्वविश्रुतं काव्यमधिगम्य मोमुद्यते सहृदयो लोकः।

लोकातीतवर्णननिपुणस्य कवेस्तत्कृतिचर्वणपरायणस्य सहृदयस्य चोभयोरपि प्रयासो लोकं भव्यालोकं विधत्ते। एतदेव कविसहृदयाख्यं

वस्तु कारणनिरपेक्षापूर्वपदार्थाविष्कारकत्वेन निजरसनिर्झरमहिम्ना ग्रावप्रख्यस्य जगतः सारवत्तासंपादकत्वेन सारस्वततत्त्वरूपतया व्यपदिश्यत आचार्यैः। शक्तिनिपुणताव्युत्पत्तिसमुपेतस्य सत्कवेर्यत् सचमत्काररचनानिष्पादकत्वं दरीदृश्यते तत् सहृदयतोन्मेषं विनैवेति नैतत् संभावयितुं शक्यते। कविरपि लोकोत्तरवर्णनाकर्णनकाले सहृदयो भवत्येव, अथवा तत्सहृदयताया एवैष प्रभावो यदसौ तथाविधं काव्यसंपत्संभारं प्रस्तौति। दृश्यते सर्वमेतत् प्राचेतसमहर्षिव्यास-महाकविकालिदासप्रभृतिषु रसस्यन्दिसूक्तिविधायिषु महापुरुषेषु। के च ते सहृदया यद्बलेन सत्काव्यप्रसारस्तत्तत्त्वोद्भावनञ्च भवतीत्य-पेक्षायामभिनवगुप्तपादाचार्या आहुः 'येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते हृदयसंवादभाजः सहृदयाः।' इति।

एवम्भूतसहृदयतोद्भावने श्रुतिस्मृतिपुराणेतिहासादिसच्छास्त्र-प्रतिपादितधर्मानुष्ठानमधर्माद् व्यावृत्तिर्भगवति पुरुषोत्तमे निरुपमा रतिरेव च कारणमित्यहं मन्ये। सहृदयतां विना नास्ति सत्काव्यप्रसर इति प्रागेव निवेदितत्वात् काव्यं प्रत्यपि तदेव कारणमिति ममाध्यवसायः।

मुनौ प्राचेतसे महर्षौ व्यासे तथा कालिदासभारविभवभूतिमाघ-श्रीहर्षप्रभृतिषु महाकविषु यदस्ति रमणीयकाव्यनिदानभूतं तत्सर्वं दृश्यते श्रीमद्भगवत्पादुकासहस्रप्रभृतिलोकोत्तरकाव्यविधायिनि श्रीमद्वेङ्कटनाथार्यनिगमान्तदेशिकस्वामिपदप्रवाले।

**योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।**
**शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना।।**

इत्यभियुक्तोक्तदिशा सरसतापादनसमर्थहृदयसंवाद्यर्थप्रकाशक-शब्दमयत्वमेव काव्यत्वमिति पादुकास्तुतिरूपप्रकृतकाव्यविधायिनाऽ-स्मदाचार्येणापि ध्वनितम्—

श्रीमते रामानुजाय नमः  श्रीवादिभीकरमहागुरवे नमः

अनन्त श्री विभूषित जगद्गुरु रामानुजाचार्य वेदान्तमार्तण्ड यतीन्द्र-स्वामिरामनारायणाचार्यकृपापात्र जगद्गुरु रामानुजाचार्य स्वामी वासुदेवाचार्य जी महाराज 'विद्याभास्कर'
अध्यक्ष
कोसलेश सदन धर्मादाय (ट्रस्ट)

## ।। प्रसादप्रसूनम् ।।

प्रतिक्षणोत्पन्नकवीन्द्रसंस्तुतिः सुरक्षितस्थावरजङ्गमस्थितिः।
अशेषशेषैकगतिर्मतौ च मे चकास्तु नारायणपादयोर्द्युतिः।।

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।।

लोके तावत् सकलपरमर्षिसमादरणीयापौरुषेयपदकदम्बकरूपा निगमास्तदेकमूलाः स्वर्गादिप्रयोजनकालौकिकोपायताप्रतिपादनपराः स्मृत्याचारपरम्परा यदधिगमनाय यदद्भुतप्रभाप्रसाराय यदन्तरूर्क्-समुज्जृम्भणाय यदुद्दामदृष्टिविवर्धनाय प्रवर्तन्ते यत्कृते चाग्निष्टोमोक्थ्यषोडश्यतिरात्राप्तोर्यामात्यग्निष्टोमवाजपेयाश्वमेधाहीनसत्रात्मानो महायागा इज्यन्ते गाणपतपाशुपतपञ्चरात्राद्यागमोदिताः सदाचाराश्च गृह्यन्ते प्रहीयन्ते चानादिमायावशोन्मिषितकदाचारास्तदाचरणापादि-तदुरितभियाऽनुष्ठीयन्ते वा शुद्धिविधायिनः प्रायश्चित्तप्रकारास्तत्सर्वं संपरिगृह्य प्रादुर्भूतानां कवितार्किकसिंहश्रीमन्निगमान्तदेशिक-वेङ्कटनाथार्यमहास्वामिनामन्तर्मानसविराजमानश्रीमद्भगवत्तत्परिच्छदरति-विशेषपरिणामभूतं **श्रीमद्भगवत्पादुकासहस्राभिधं** श्रीनारायणवक्षः-स्थलविभ्राजमानकौस्तुभाख्यमहामणिसध्रीचीनं विश्वविश्रुतं काव्यमधिगम्य मोमुद्यते सहृदयो लोकः।

लोकातीतवर्णननिपुणस्य कवेस्तत्कृतिचर्वणपरायणस्य सहृदयस्य चोभयोरपि प्रयासो लोकं भव्यालोकं विधत्ते। एतदेव कविसहृदयाख्यं

वस्तु कारणनिरपेक्षापूर्वपदार्थाविष्कारकत्वेन निजरसनिर्झरमहिम्ना ग्रावप्रख्यस्य जगतः सारवत्तासंपादकत्वेन सारस्वततत्त्वरूपतया व्यपदिश्यत आचार्यैः। शक्तिनिपुणताव्युत्पत्तिसमुपेतस्य सत्कवेर्यत् सचमत्काररचनानिष्पादकत्वं दरीदृश्यते तत् सहृदयतोन्मेषं विनैवेति नैतत् संभावयितुं शक्यते। कविरपि लोकोत्तरवर्णनाकर्णनकाले सहृदयो भवत्येव, अथवा तत्सहृदयताया एवैष प्रभावो यदसौ तथाविधं काव्यसंपत्संभारं प्रस्तौति। दृश्यते सर्वमेतत् प्राचेतसमहर्षिव्यास-महाकविकालिदासप्रभृतिषु रसस्यन्दिसूक्तिविधायिषु महापुरुषेषु। के च ते सहृदया यद्बलेन सत्काव्यप्रसारस्तत्तत्त्वोद्भावनञ्च भवतीत्य-पेक्षायामभिनवगुप्तपादाचार्या आहुः 'येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते हृदयसंवादभाजः सहृदयाः।' इति।

एवम्भूतसहृदयतोद्भावने श्रुतिस्मृतिपुराणेतिहासादिसच्छास्त्र-प्रतिपादितधर्मानुष्ठानमधर्माद् व्यावृत्तिर्भगवति पुरुषोत्तमे निरुपमा रतिरेव च कारणमित्यहं मन्ये। सहृदयतां विना नास्ति सत्काव्यप्रसर इति प्रागेव निवेदितत्वात् काव्यं प्रत्यपि तदेव कारणमिति ममाध्यवसायः।

मुनौ प्राचेतसे महर्षौ व्यासे तथा कालिदासभारविभवभूतिमाघ-श्रीहर्षप्रभृतिषु महाकविषु यदस्ति रमणीयकाव्यनिदानभूतं तत्सर्वं दृश्यते श्रीमद्भगवत्पादुकासहस्रप्रभृतिलोकोत्तरकाव्यविधायिनि श्रीमद्वेङ्कटनाथार्यनिगमान्तदेशिकस्वामिपदप्रवाले।

**योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।**
**शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना।।**

इत्यभियुक्तोक्तदिशा सरसतापादनसमर्थहृदयसंवाद्यर्थप्रकाशक-शब्दमयत्वमेव काव्यत्वमिति पादुकास्तुतिरूपप्रकृतकाव्यविधायिनाऽ-स्मदाचार्येणापि ध्वनितम्—

**निरुन्मादो यद् वा निरवधिसुधानिर्झरमुचो।**

**वचोभङ्गीरेता न कथमनुरुन्धे सहृदयः।।'** इति।

अत्र 'निरवधिसुधानिर्झरमुचो वचोभङ्गीरित्यनेन रसभरित-सन्दर्भरीतेः काव्यत्वमिति काव्यलक्षणमेव निगदितं तैर्यदुपेतं काव्यं काव्यतत्त्वज्ञः सहृदयः परिगृह्णाति। एवञ्च काव्यमार्गे श्रीमद्वेदान्तदेशिकस्वामिपादा ध्वनिकारोद्भावितमेव पन्थानं जगृहुरिति तदीयसकलकाव्यपर्यालोचनेन निश्चीयते। रसरूपतयाऽनश्वरीं प्रतिष्ठामाप्तः सहृदयश्लाघ्यो ध्वन्यमान एवार्थो रामणीयक-संभारसंभिन्नः प्राणभूतस्तिष्ठति यत्र ललितोचितसन्निवेशमनोहरा शब्दार्थयुगली शरीरभूता। अत्र ललितशब्देन गुणालङ्कारपरिग्रह-स्तथोचितशब्देन महाकवीनां रसविषयकौचित्यसंपादनसंरम्भदर्शनाद् रसपरिग्रहश्च द्योत्यते। रसश्च स एव निगदितो यः शब्दसमर्पितैर्हृदय-संवादसुन्दरैर्विभावानुभावव्यभिचारिभिः समुदिताया अनादि-वासनात्मतया प्रागेव निविष्टाया रत्यादिवासनाया अनुरागेणानुरञ्जितेन सुकुमारतरेण स्वसंविदानन्दचर्वणात्मकध्वननव्यापारेण रसनीयो भवति।

अस्मिँश्च पादुकासहस्रे काव्ये पूर्णतया रसभावादिपरिपाको दृश्यते। चमत्कारसारस्यैव काव्यत्वेन चमत्कारस्य च रसालङ्कारान्यतरायत्तत्वेनालङ्काराणां महत्त्वं नापलपितुं शक्यं कविवर्त्मनि। अतएव प्रकृतमहाकविरपि शब्दविच्छित्तिं परिपुष्णन्नेव यथायथमलङ्कारान् योजयति। एवञ्चास्मिन् काव्ये प्रायः सर्वेऽपि काव्यप्रकाराः प्रतिभान्ति। किं बहुना? अस्यैवैकस्य महाभागवतकवितार्किकसिंहस्य काव्यराशिं संगृह्य नैके प्रबन्धग्रन्थाः प्रकाशादिसध्रीचीनाः सम्पादयितुं शक्यन्ते सूरिभिरित्यत्र नास्ति संशय-लेशः। अस्त्येवास्माकं योजना यदस्यैव महाकवेरुदाहरणतया रचनाः संगृह्य महनीयप्रबन्धग्रन्थसम्पादनं भवेद् यदवलम्बनेनास्मत्संप्रदाय-दीक्षिता युवानो व्युत्पत्तिभाजो भवेयुरिति।

श्रीमद्रङ्गनाथभगवत्पादुकामेवाधिकृत्य प्रवृत्तमेतत् काव्यरत्नमिति वर्णनासौकर्याय द्वात्रिंशत्संख्याकाः पद्धतय उद्भावितास्तैः। तत्र प्रस्तावसमाख्याप्रभावपद्धतीरधिकृत्याद्यो भागश्चकास्ति। एवमेव समर्पणप्रतिप्रस्थानाधिकारपरिग्रहाभिषेकनिर्यातनापद्धतिपर्यन्तो द्वितीयः, वैतालिकशृङ्गारसञ्चारपुष्पपरागनादावसानस्तृतीयः, रत्नसामान्यबहुरत्न-पद्मरागमुक्तामरकतेन्द्रनीलबिम्बप्रतिबिम्बकाञ्चनशेषद्वन्द्वसन्निवेशयन्त्रि-कारेखान्तश्चतुर्थः, सुभाषितप्रकीर्णचित्रात्मकः पञ्चमस्तथोपसंहारभूत-निर्वेदफलपद्धतिरूपःषष्ठ इत्याहत्य षोढा विभागः पुनः सम्पद्यते। अपवर्गसाधनतया श्रीमद्भगवत्तत्त्वपुनःपुनरनुसन्धानात्मिका प्रीत्यति-शयरूपा भक्तिरेव श्रुति-स्मृतिप्रभृतिभिः शास्त्रैरवबोधितेति भगवत्स्तुतिमनादृत्य कथमिह कविसहृदयचक्रचूडामणे स्तच्चरण-त्राणस्तुतौ प्रवृत्तिर्जातेति शङ्कायामिदमेवोत्तरं समापतति स्वामिनः प्रियवस्तुनि प्रेमातिशयः स्वामिनमधिकं प्रीणातीति। अथवा पादुकास्तुतिद्वारा श्रीमद्भगवन्माहात्म्यख्यापनमेव संपद्यते तेन च तत्प्रीत्या सकलपुरुषार्थसिद्धिः। सर्वथा सप्रयोजनमेवैतत् काव्यरत्नम्।

भावप्रधानरचनाबाहुल्येऽपि यथायथं प्रतिभाप्रकर्षबलेनालङ्कार-गुम्फनमस्मिन् काव्ये सर्वत्रैव दृश्यते विशेषेणोत्प्रेक्षाच्छटा कालिदासकाव्येष्विवोपमाच्छटा। यथा नादपद्धतौ—

**स्वदते किमिहैव रङ्गनाथो मयि तिष्ठन् यदि वा पदे परस्मिन्।**
**इति पृच्छसि नूनमस्मान् मधुरैस्त्वं मणिपादुके! निनादैः।।**

अत्र श्रीरङ्गायतनं पादुका वैकुण्ठाख्यं पदं वा भगवते रोचत इति पादुका पृच्छतीव स्वैर्निनादैर्भातीत्युत्प्रेक्षा स्पष्टं प्रतीयते। ततश्च पादुकायामागमव्याभिमुख्यकरणेनायत्नसेव्यत्वादादरातिशयात्मकमुत्तररूपं वस्तु व्यज्यते, ततश्च श्रीरङ्गवैकुण्ठापेक्षया व्यतिरेकालङ्कारध्वनिः।

यथा वा—

**दनुतनयनिहन्तु जैत्रयात्रानुकूले**
**शरदुपगमकाले सह्यजामापतन्ति।**

श्रुतिमधुरमुदारं शिक्षितुं ते निनादं
परिहृतनिजवासाः पादुके! राजहंसाः।।

अत्रापि शरदागमनकाले कावेर्यां हंसागमनं पादुकाकलरवाभ्यासार्थमित्युद्भावनादुत्प्रेक्षैव। तेन च हंसरवापेक्षया पादुकानादस्योत्कर्षरूपो व्यतिरेक इत्यलङ्कारेणालङ्कारध्वनिः।

नादपद्धत्यामेव—

भोगाय देवि! भवती मणिपादरक्षे!
पद्मासहायमधिरोप्य भुजङ्गतल्पे।
विश्वस्य गुप्तिमधिकृत्य विहारहीना
वाचंयमा किमपि चिन्तयतीव कार्यम्।।

अत्राप्युत्प्रेक्षालङ्कारेण पादुकायाः श्रीभगवदपेक्षयापि वृस्तृतो जगद्रक्षाभारः प्रतीयत इति तत्प्रभावातिशरूपं वस्तु व्यज्यमानं पादुकाविषयककविनिष्ठरत्याख्यभावमुपस्करोतीत्युत्तमोत्तमकाव्योदाहरणमेतत् संपद्यते।

अनन्तरश्लोकेऽपि—

नित्यप्रबोधसुभगे पुरुषे परस्मिन्
निद्रामुपेयुषि तदेकविहारशीला।
मञ्जुस्वनं विजहती मणिपादुके! त्वं
संवेशमिच्छति परं चरणान्तिकस्था।।

इत्यत्रोत्प्रेक्षाविरोधाभासालङ्कारयोः संसृष्टिस्तथा विशेषणमहिम्ना पत्नीत्वव्यञ्जनात् समासोक्तिरित्यलङ्कारत्रयेणालोकसाधारणात्मकत्वं पादुकाया व्यज्यते। कविप्रौढोक्तिसिद्धव्यञ्जकत्वमत्र निभालनीयम्। एवमन्यान्यपि प्राधान्येन ध्वनिविषयाण्युदाहरणान्यत्र काव्ये सन्ति। तथा च प्रतिप्रस्थानपद्धतौ—

दशग्रीवस्तम्बेरमदलनदुर्दान्तहृदये
विहारस्वाच्छन्द्याद् विशति रघुसिंहे वनभुवम्।

**स्ववात्सल्यक्रोडीकृतभरतशावेव भवती**
**निराबाधां पादावनि! न विजहौ कोशलगुहाम्।।**

अत्र पादुकासिंहीत्वस्याकथनेनैकदेशविवर्तिरूपकमस्त्येव। रघुसिंहस्य वनभूप्रवेशे क्षत्रियोचितस्य विहारस्वाच्छन्द्यस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमपि भासते। तृतीयपादे स्ववात्सल्यक्रोडीकृत-भरतशावेवेत्युप्रेक्षा विराजत एव, अन्यथा कथमिव भगवदेकपरायणा पादुका कोसलगुहां न विजह्यात्। अत्र स्वभक्तान् प्रति पादुकाया सर्वविधरक्षापरत्वं ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

श्लेषविच्छित्तिमूला अत्र काव्ये शताधिकाः श्लोकाः सन्ति लोकोत्तरचमत्कारविधायिनोऽर्थगाम्भीर्यबहुलाश्च। तथा च मौक्तिकपद्धतौ—

**समाश्रितानामनघां विशुद्धिं त्रासव्यपायं च वितन्वती त्वम्।**
**सायुज्यमापादयसि स्वकीयैर्मुक्ताफलैर्माधवपादुके! नः।।**

अत्र पादुकान्यस्तमुक्ताफलैस्तथा फलरहितैराप्तकामैर्मुक्तपुरुषैः साम्यापादनरूप उपमाध्वनिः श्लेषभित्त्यैव चकास्ति। नूनमेतादृक्-काव्यनिर्माणकौशलं वेदान्तदेशिकस्वामिन एव लोकोत्तरप्रतिभाधनिनः। कुत्रचित्तु बहूनामलङ्काराणां साङ्कर्यं प्रतीयते। तथा हि काञ्चनपद्धतौ—

**कनकमपि तृणं ये मन्वते वीतरागा-**
**स्तृणमपि कनकं ते जानते त्वत्प्रकाशैः।**
**मधुरिपुपदरक्षे! यत्त्वदर्थोपनीतान्**
**परिणमयसि हैमान् देवि! दूर्वाङ्कुरादीन्।।**

अत्र काव्यलिङ्गभ्रमविषमव्याघातादीनामलङ्काराणां साङ्कर्यम्।

अपि च भूतभावने शिवेऽस्य सहृदयकवेर्विशेषतः प्रीतिः प्रतीयते यत् तद्विषयका बहवः श्लोका अस्मिन् काव्ये चकासति। तथा च बहुरत्नपद्धतौ—

बध्नासि रङ्गपतिविभ्रमपादुके! त्वं
मायाकिरातमुकुटे नवबर्हमालाम्।
आकृष्टवासवधनुःशकलैर्मणीना-
मन्योन्यसंघटितकर्बुरितैर्मयूखैः।।

अत्र पादुका महेन्द्रचापसदृशवर्णैर्मायाकिरातस्य शिरसि नवबर्हमालां योजयतीत्युत्प्रेक्षैवातिशयोक्तिगर्भिता। अत्रैव पद्धतौ पञ्चविंशश्लोके पादुकाद्वारा पार्वतीपरमेश्वरयोरेकस्याकारस्यापादनं यदस्ति तन्नूनमेव सहृदयमनांस्यावर्जयति। तथा हि तत्रत्यः श्लोकः—

अन्योन्यबन्धुरहरिन्मणिपद्मरागा
रङ्गेश्वरस्य चरणावनि! राजसे त्वम्।
आत्मोपमानविभवाच्चरितार्थयन्ती
शैलात्मजागिरिशयोरिव मूर्तिमेकाम्।।

अस्यामेव पद्धतावयं श्लोको विशेषतो निभालनीयोऽस्ति—

रङ्गाधिराजपदरक्षिणि! बिभ्रतस्त्वां
गङ्गातरङ्गविमले गिरिशस्य मौलौ।
संवर्धयन्ति महसा तव पद्मरागाः
शैलात्मजाचरणयावकपङ्कलक्ष्मीम्।। इति।

मौक्तिकपद्धतावपि शिवमधिकृत्य बहूनि पद्यानि चकासति। तथा हि—

ये भजन्ति भवतीं तवैव ते मौक्तिकद्युतिविकल्पगङ्गया।
वर्धयन्ति मधुवैरिपादुके! मौलिचन्द्रशकलस्य चन्द्रिकाम्।।

अत्र पर्यायोक्तमलङ्कारः। एवं दशमः श्लोकोऽपि विराजते। अत्रैव पद्धतौ—

कपर्दे कस्यापि क्षितिधरपदत्रायिणि! तथा
मुहुर्गङ्गामन्यां क्षरति तव मुक्तामणिमहः।

मुधारम्भः कुम्भस्थलमनुकलं सिञ्चति यथा
निरालम्बो लम्बोदरकलभशुण्डालचुलकः।।

अत्र द्वितीयपादेऽतिशयोक्तिस्तदुत्थापितश्च भ्रान्तिमानलङ्कारः। भगवाञ्छिवः सदैव श्रीरङ्गनाथपादुकां शिरसा वहतीति वस्तु व्यज्यमानं पादुकायां कवे रतिं पुष्णातीति सहृदया विभावयन्तु। हृद्गतभावाभिव्यञ्जनक्षमां शब्दसंयोजनात्मिकां संघटनामपि न विस्मरति महाकविः। दुर्लभमिदं सामरस्यमस्मिन् काव्ये दृश्यते। दिङ्मात्रमुदाह्रियते—

विलासैः क्रीडन्तो निखिलजनचेतांसि विविधा
विहारास्ते रङ्गक्षितिरमणपादावनि! मुहुः।
विगाहन्तामन्तर्मम विलुठदन्तर्मणिशिला-
खलात्कारव्याजक्षरदमृतधाराधमनयः।।

अत्र रचनानुप्राणितः कविनिष्ठपादुकाविषयको भावः प्राधान्येन व्यज्यते।

श्रुतिश्रेणीस्थेयश्रुतिसुभगशिञ्जामुखरितां
भजेम त्वां पद्मारमणचरणत्रायिणि! परम्।
न मुद्रानिद्राणद्रविणकणविश्राणनदशा-
विशालाहङ्कारं कमपि घनहुङ्कारपरुषम्।।

अत्र हेतुरलङ्कारः। क्षुद्रसेवाऽभावेन कार्येण सह पादुकासेवारूपस्य कारणस्य प्रतिपादनात्। यथा धनिकानां हुङ्कारे पारुष्यं तथैव तदभिव्यञ्जनक्षमा परुषाक्षरा संघटनाऽपि दीर्घसमासा समुज्जृम्भते। अत्रैव महाकवे र्व्यक्तित्वमपि द्योत्यते यत्सम्पादनाय सकलशास्त्र-समुद्योगः। एतादृगवस्थ एव जनः सर्वविधभौतिकविषयपराङ्मुखः श्रीमद्भगवत्सेवायामधिकारीति प्रतीयते।

कालिदासवत् सरसा पदावली ध्वनिव्यञ्जनक्षममर्थयोजनञ्च भारविवद् भावगाम्भीर्यं माघवद् वर्णनाचातुरी श्रीहर्षवच्छास्त्रीय-सारगुम्फिता बह्वर्थप्रकाशिका नैरन्तर्यनिरवधिप्रसरा नूतनोत्प्रेक्षणक्षमता भवभूतिवद्रसस्यन्दिनी शिखरिणी विराजमाना काव्यचमत्कारदिशाऽपि पादुकासहस्रे सकलविपश्चित्सहृदयानां मनःसु सुतरामद्भुतरसं सञ्चारयति। महाकविरयं भक्त्यतिरेकं समुद्भासयन् दृश्यते। निभालनीयस्तावदयं श्लोकः—

**अहीनात्मा रङ्गक्षितिरमणपादावनि! सदा।**
**सतामित्थं त्राणात् प्रथितनिजसत्त्रत्वविभवा।**
**अविद्यायामिन्याः स्पृशसि पुनरेकाहपदवीं**
**क्रतूनामाराध्या क्रतुरपि च सर्वस्त्वमसि नः।।**

अत्र अहीनः श्रेष्ठ अहीनां सर्पाणामिनस्य स्वामिनः शेषस्य आत्मा स्वरूपं शरीरं यस्याः सा, सत्पुरुषरक्षासम्पादनात् प्रथितःस्वकीयसत्त्राणत्वविभवो यया सा, अविद्यात्मकरात्रेरद्वितीय-दिवसभङ्गीयुता पादुका क्रतुभिर्यागैराराध्यापि क्रतुरूपैवेति श्लेषानुप्राणितेन विरोधालङ्कारेण लोकोत्तरप्रभावं पादुकायाः कविः प्रख्यापयति। कथं क्रतुस्वरूपा पादुकेति श्लेषेणैव समाधीयते— अहीनः 'अह्नः खः क्रतौ' इति पाणिनीयस्मृत्या गणयागः स्वरूपं यस्याः सा, प्रथितः स्वस्य सत्त्रयागस्य विभवो यया सा, एकाहः साद्यस्क्रापरनामधेयज्योतिष्टोमविकारभूतो यागस्तस्य पदवीं मार्गं स्पृशति पादुका एवञ्च तस्याः क्रत्वात्मकत्वमप्ययत्नसिद्धं भवति। रत्यात्मको भावस्तु प्राधान्येन स्फुरति। एवं बहवः श्लोका अत्र काव्ये सन्ति ये विदुषां मनांस्यावर्जयन्ति।

श्रीमद्वेदान्तदेशिकस्वामिनां सकलकाव्यालोकनेन कोऽप्यनुमातुं-शक्नोति यदेभिः स्वस्मात् प्राक्तना सर्वेऽपि काव्यप्रबन्धाः-पठितास्तथापि महाकविकालिदास एवैतेषां काव्याध्वनि

परमादर्शभूतस्तिष्ठति यतस्तस्य काव्यस्य छायाऽत्र काव्ये क्वचिद् दृश्यते। तथा हि अयं श्लोकः—

**रम्यालोका ललितगमना पद्मरागाधरोष्ठी**
**मध्ये क्षामा मणिवलयिनी मौक्तिकव्यक्तहासा।**
**श्यामा नित्यं हरितमणिभिः शार्ङ्गिणः पादरक्षे!**
**मन्ये धातुर्भवसि महिलानिर्मितौ मातृका त्वम्।।**

(प्रकीर्णपद्धतौ, ६८)

अत्र—

**तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी**
**मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।**
**क्षोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां**
**या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः।।**

इत्यस्य मेघदूतपद्यस्य छाया दृश्यते। अत्र को हेतुरित्यपेक्षायां महाकविकालिदासं प्रति श्रद्धातिशय एवैतेषामित्युत्तरमायाति। अन्यथा सत्यप्यपारकाव्यविभवे कथमिव तदीयच्छायां गृह्णीयुरेत इति। तच्छायासत्त्वेऽपि ध्वनेः समाश्रयणात् श्लेषभित्त्या वा सर्वथा नूत्नत्वमापादयन्तः पादुकास्तुतिकाराः स्वस्य महाकवितल्लज्जत्वं प्रथन्त एवेति सुधियः प्रमाणम्।

अस्मिन् काव्ये सन्ति तथाविधानि परःशतानि पद्यानि यानि सकलशास्त्रतत्त्वसमालोचनमन्तरेण नैव लब्धप्रसराणि।

**प्रत्यङ्मयस्य हविषः प्रणवेन देवि!**
**प्रक्षेपणाय परमार्थविदां मुनीनाम्।**
**प्राज्यां मुकुन्दचरणावनि! पद्मरागैः**
**पर्यायपावकशिखां भवतीं प्रतीमः।।**

अद्भुतः प्रयासोऽयं श्रीवेदान्तदेशिकस्वामिनाम्। यथेन्द्राद्युद्देशेन मन्त्राभिधानपुरःसरं त्यक्तस्य हविषः प्रतिपत्त्यर्थत्वेन वह्नौ प्रक्षेपो भवति तथैवौङ्कारमन्त्रेण परमात्मशेषतया न्यस्तभरस्य प्रत्यगात्मनोऽपि तत्त्वेन प्रक्षेपणाय पद्मरागवती पादुका आहवनीयाग्नित्वेनोद्भाव्यते। द्वन्द्वपद्धतौ श्रीनारायणचरणकमलयोः समासक्तयोः पादुकयोः समागमस्योद्भावनं परापरविद्यात्मत्वेन यदस्ति तच्छास्त्रीयदृष्टिं विना न संभवति। अस्मन्नये भगवान् श्रीपुरुषोत्तम एव शेषित्वेन स्वीक्रियते। तदेव भगवतः शेषित्वं निगमा 'एकमेवाद्वितीयं नेह नानास्ति किञ्चन इत्यादिना द्रढयन्ति। एवञ्च जीवानां गौरवं भगवच्छेषत्वाधिक्य-संपादनेनैव सम्भवति यत्राहङ्कारादिकस्य नास्ति संश्लेषः। एतद्गभीरवस्तु विलोकयितुं समाख्यापद्धतौ सप्तमः श्लोको विराजते—

**शय्यात्मना मधुरिपोरसि शेषभूता**
**पादाश्रयेण च पुनर्द्विगुणीकृतं तत्।**
**भूयोऽपि भागवतशेषतया तदेव**
**व्यङ्क्तुं पदावनि! शठारिपदं बिभर्षि।।** इति।

भागवतशेषत्वमन्तरेण भगवच्छेषत्वस्य संभावनैव नास्ति। भागवतशेषत्वमेव द्योतयितुं पादुका शठकोपपदं बिभर्ति। परमभागवतो हि श्रीशठकोपसूरिः। सम्प्रदाये दासानुदास इति समख्यैतन्मूलैवेति विभावयामि। सर्वथा लोकोत्तरप्रतिभाप्रकर्षवशोन्मिषिता अत्र सर्व एव श्लोकाः सन्ति। तदवलोकनेन स्वामिवर्यदेशिकपादानां मस्तके श्रीमतो भगवतः करकञ्जनिपतनमभूत् आहोस्वित् ध्रुवस्य वदन इव तदीयवदनाम्बुरुहे पाञ्चजन्यस्पर्शः समजनि किं वा वाग्देवता ब्रह्माणं त्यक्त्वा तद्वदनमधिरूढेति निश्चेतुं विमूढमिव मम चेतो भवति। कथमन्यथैतादृक्काव्यप्रसरो भवेत्। सौभाग्यमस्ति सहृदयसमाजस्य यदेतादृक् काव्यरत्नं भुवि चकास्ति।

अनुपमस्याप्यस्य काव्यग्रन्थस्य दक्षिणे यथा प्रचारो न तथोत्तरदेशे। श्रीश्रीनिवाससूरिविहितया संस्कृतटीकया सह दाक्षिणात्यभाषायां भावार्थप्रकाशोन्मुखा व्याख्या:सन्ति:। उत्तरदेशेऽपि हिन्दीव्याख्यासंवलितस्यास्य काव्यरत्नस्य प्रकाशनं भवेदिति सकलसहृदयभक्ततल्लजानां गूढतमोऽभिलाष आसीत्। परमेशकृपया श्रीरङ्गरामानुजाचार्यसत्प्रेरणया च मदीयमानसे मनोरथानोकहः प्रावर्धत विराजतामयमप्रतिमः काव्यग्रन्थो हिन्दीव्याख्यासंवलित इति। अस्मदशेषकृपाभाजनश्रीमद्भगवच्छेषभूतः कृष्णनारायणाचार्या-परनामधेयश्रीकमलाकान्तत्रिपाठिमहाशयो मन्नियोगं विपुलतरप्रसाद-पिण्डमिव सादरमङ्गीकृत्य व्याख्यां विधातुं प्रारभत। सर्वोऽपि भारोऽस्यैवोपरि न परिपतेदिति सम्पादनभरमहं स्वीकृतवान्। इदानीं सर्वभूषाविभूषितविग्रहः कमनीयो वर इव कन्यापितुः प्राङ्गणं पादुकासहस्राभिधानः काव्यग्रन्थोऽयं सहृदयभक्तशिरोमणिमहार्घ-मणिनिकरं सस्पृहं विशतीति मदीये चेतसि विपुलतमं प्रमोदझरं निश्च्योतति। ममैव किम्, सकलस्यैव लोकस्य मुदावह एवैतत्—काव्यसमुन्मेषः। प्रातःस्मरणीयपदपङ्कजश्रीकाञ्चीप्रतिवादिभयङ्कर-मठाधीश्वरश्रीमद्रामानुजसत्संप्रदायाचार्यजगद्गुरुगादिस्वामिश्रीमच्छ्रीनिवासा-चार्यस्वामिपादानां शुभाशंसनं पीयूषवर्षणमिवास्मान् प्रपन्नजनान् प्रीणाति। श्रीमद्रामानुजसम्प्रदायमेरुभूतस्वामिपादपदपङ्कजयोः सर्वतोभावं प्रणिपत्य कृतकृत्यमिवात्मानमनुभवामि। अतः परं श्रीवानमामलैमठ-नानुगुनेरीस्थितश्रीकलियन्वानमामलैरामानुजतोताद्रिजीयरस्वामिपादानां मङ्गलाशासनवार्ताऽभिनन्दमपि प्राप्तमिति वत्से धेनोरिव तदीयवात्सल्यततिरस्मासु सुधां क्षरन्ती हर्षनिर्भरमानसानस्मान् करोति। श्रीमत्तोताद्रिस्वामिपदप्रवालयो भूयोभूयः साष्टाङ्गप्रणतयोऽस्माकं समुल्लसन्तु। उद्योगभूमिकां श्रीरामानुजसम्प्रदायधुराञ्च वहतो **वैष्णवतल्लजस्य श्रीवासुदेवसोमानीमहोदस्या**त्मजो निजपितुरेवादर्श-मुपसंगृह्णन् विराजमानो विलोक्यते श्रीरङ्गनाथ**सोमानीमहोदयः**। अस्य

पादुकासहस्राभिधानस्य काव्यरत्नस्य प्रकाशनभरं स्वीकृत्यासौ नूनमेवाखिलब्रह्माण्डनायकस्य श्रीमन्नारायणस्य भगवतोऽशेषकृपा-भाजनतामुपैति। सर्वप्रकारं तदीयकुलं सहस्रशाखीभवत् पादुकाप्रासात् प्रवर्धतामिति भगवन्तं प्रार्थये। अन्ये च श्रीभाष्यकारश्रीमद्भगव-द्रामानुजसम्प्रदायसमृद्धिं विदधानाः प्रेष्ठतमा जगद्गुरवः प्रपत्तिपरायणाः साधवश्च सन्ति तान् प्रत्यपि पूर्णतः कृतज्ञोऽस्ति। सर्वेषामेव मनसि सभाषाव्याख्यपादुकासहस्राख्यसत्काव्याविर्भावं प्रति कौतुकं सकौतुकं विराजत इति सर्व एवात्मनि कृतकृत्यतामनुभवन्तः श्रीमद्भगवन्नाराय-णप्रसत्तिं प्राप्नुवन्त्विति

**बद्धहरिपादयुगलं युगलं तपनीयपादुके! युवयोः।**
**मोचयति संश्रितानां पुण्यापुण्यमयशृङ्खलायुगलम्।।**

इति सूक्तिं संस्मरन्।

श्रीभगवतश्चरणयोरेवात्मानं विनिवेद्य विरमामि।

भवदीय एव

[signature]

।।विजयते श्रीबालकृष्णप्रभुः।।

।।श्री यदुनाथमहाप्रभुः प्रसीदतुतमाम्।।

**अनन्तश्रीविभूषित जगद्गुरुश्रीमद्विष्णुस्वामिवल्लभाचार्य-महाप्रभुसंप्रदायवैष्णवाचार्यमोटामन्दिरगादीपतिसोमयाजी षष्ठपीठाधीश्वर गो. श्रीवल्लभरायजी महाराजश्री-सूरत**

# शुभाशंसनम्

कवितार्किकसिंहश्रीवेदान्तदेशिकस्वामिप्रणीतः पादुकासहस्रनामकः छन्दोबद्धो ग्रन्थो निरतिशयचमत्कारपूर्णो वरीवर्ति। तदयं ग्रन्थो न केवलं काव्यात्मकः किन्तु वेदवेदान्ततत्त्वप्रकाशको भक्तिरसाप्लावितश्च।

श्रीभगवदवतारचरित्रेषु पादुकामाहात्म्यं वाल्मीकिरामायणादिषु स्फुटतरं समुपलभ्यते। यद्यपि साक्षाद्भगवदनुपस्थितौ तत्प्रतिनिधित्वेन पादुकाप्रदानं भक्तेभ्यो भगवतैव कृतमित्यापाततः प्रतिभाति तथापि सूक्ष्मेक्षिकया विचारे क्रियमाणे भक्तानां निरतिशयस्नेहाधिक्येन तत्र भगवदभेदबुद्धेरतिप्रबलत्वाद् भक्तवत्सलो भगवान् भक्तमनोरथपूर्तये साक्षादेवाविर्भवति स्वानुभावञ्चानुभावयतीति भक्तानां स्वानुभवसिद्धः सिद्धान्तः। तथा च भक्तिरहितात्मनां पादत्राणादिरूपत्वेन भवतु पादुकाबुद्धिः श्रद्धावतां वा भगवत्प्रतिनिधित्वेन बुद्धिः परन्तु भक्तिपूर्णान्तःकरणवतां कृते तु साक्षाद्भगवद्रूपत्वमेव। तेषां तद्रूपेणैव सर्वोऽपि व्यवहारो भगवतोऽपि तथा भक्तोद्धारार्थं स्वानुभवानुभावनेन भक्तकृतार्थीकरणचरित्रं भक्तैरनुभूयते।

अत एव पादुकां सेवमानानां भक्तानां तत्र भक्तिमार्गानुसारेण नानाविधोपचारादिरूपः सर्वोऽपि व्यवहारः संगच्छते। अन्यथा पादुकानां चरणसम्बन्धप्राधान्येन चरणोचितोपचार एव संगतो भवेत्, न तु तत्र ललाटोचिततिलकाद्युपचारा मस्तकोचितकिरीटाद्युपचाराः कण्ठोचितहार-

मालाद्युपचारा नानाविधभोगसमर्पणादर्शविलोकनादिविविधभक्ति-मार्गीयोपचाराः संगच्छेरन्।

पादुकासु भक्तिमार्गीयभाववतां साक्षाद्भगवद्बुद्धिरेव स्थिरीभूता तिष्ठति, अत एव श्रीभरतस्य साक्षाच्छ्रीरामवदेव सर्वोऽपि व्यवहारो राज्यसंचालनादिरूपोऽपि।

अत्र विचारकाणामेकः प्रश्नो भवितुमर्हति यत् तत्र यदि साक्षाच्छ्रीरामबुद्धिः श्रीभरतस्यासीत् तदा किमर्थं श्रीरामप्रतीक्षादिकम्? तत्र पादुकानां श्रीरामाभेदेन सेवनेऽपि तत्प्रतीक्षादिना न तत्र साक्षाद्रामरूपत्वं न वा तत्र रामाभेदबुद्धिरिति समाधानं वक्तुं शक्यम्। पादुकानां श्रीरामाभिन्नत्वेऽपि तत्र तदभेदबुद्धेश्चापि विद्यमानत्वेऽपि विरहविकलानां भक्तानां बहिःप्राकट्यमेवाभिलषितम्। एषैव भावना सर्वत्र विरहव्याकुलानां तच्चरित्रेषु समनुभूयते। यथा व्रजसीमन्तिनीनां स्वप्रियतमविरहावस्थायां हृदये प्रियतमानुभवेऽपि भगवतः बहिःप्राकट्यमेवाभिलषितम्। अत एव—'सखे दर्शय सन्निधिमित्यादिवचांसि संगच्छन्ते। एवमेव श्रीभरतविषयेऽपि ज्ञेयम्।

'यस्य देवे परा भक्ति र्यथा देवे तथा गुराविति श्वेताश्वतरोक्तदिशा गुरुपादुकासु साक्षाद्गुर्वभेदबुद्धिर्गुरुबुद्धिरपि भक्तैर्विधीयते।

तदयं महान् प्रमोदविषयो यत् पादुकासहस्रनामग्रन्थ-स्यास्मत्सुहृद्वर्यैः श्रीमज्जगद्गुरुरामानुजाचार्यैः श्रीकोसलेशसदन-पीठाधीश्वरैः श्रीमद्वासुदेवाचार्य 'विद्याभास्कर'स्वामिभिः संपादितस्य तथा तच्छिश्यश्रीकृष्णनारायणाचार्योपनामश्रीकमलाकान्तत्रिपाठि-महोदयेन विहितहिन्दीव्याख्यया विभूषितस्य प्रकाशनं परमलोकोपकारकं भविष्यतीति शुभम्—

गो० श्रीवल्लभशास्त्री

# पादुकासहस्रपारायणफलम्

कवित्वप्रौढिकाङ्क्षायां पाठ्या प्रस्तावपद्धतिः ।
सूरिसूक्तिरसास्वादं समाख्यापद्धतिर्दिशेत् ।।१।।

प्रभावपद्धतिः सेव्या प्रभुत्वोन्नतिवाञ्छने ।
अपवादपरीहारः स्यात् समर्पणपद्धतिः ।।२।।

प्रेप्सितं लम्भयेत् पुंसः प्रतिप्रस्थानपद्धतिः ।
अपेक्षितेऽधिकारी स्यात् अधिकारपरिग्रहात् ।।३।।

सुभिक्षमभिषेकात् स्यात् दानं निर्यातनाफलम् ।
वन्दिशृङ्गारतो भोगी सञ्चाराद् यात्रिके सुखम् ।।४।।

पुष्पात् पुष्पार्चनं शक्यं परागादपरागता ।
वादव्याख्यानसंगीतदाक्ष्यदा नादपद्धतिः ।।५।।

रत्नस्वर्णादिलिप्सूनां रत्नपद्धतयः शुभाः ।
पुत्रादिलाभो बिम्बात् स्यात् शेषात् श्रीकान्तशेषता ।।६।।

विवाहो द्वन्द्वपद्धत्या सन्निवेशात् सुरूपता ।
यन्त्रिका भूषणं दद्यात् रेखा लेखनकौशलम् ।।७।।

फलं सर्वं प्रकीर्णात् स्यात् चित्रात् स्यात्तु विलक्षणः ।
वैराग्यभाक् स्याद् निर्वेदाद् मुक्तिभाक् फलपद्धतेः ।।८।।

श्रीपादुकासहस्रस्य नित्यं पारायणे रताः ।
सर्वसम्पत्समृद्धाः स्युर्गुरुश्रीशप्रसादतः ।।९।।

श्रीरङ्गनाथश्रीदिव्यपादुकाभ्यां नमो नमः ।
वेदान्तदेशिकश्रीमत्पादुकाभ्यां नमो नमः ।।१०।।



# ‘पादुकासाहस्त्री’

## श्रीवैष्णवधर्मसंस्थापन का प्रयत्न

**विशिष्टाद्वैतदर्शन**—वैदिक दार्शनिक विचारधाराओं का केन्द्रबिन्दु **ब्रह्म** है। सामाजिक, आर्थिक जीवन एवं व्यवहार का केन्द्रबिन्दु **धर्म** है। कुलधर्म जातिधर्म राष्ट्रधर्म एवं विश्वधर्म का परमवैज्ञानिक विवेचन स्मृतियों पुराणों रामायणों एवं महाभारत में विस्तार से परमाप्त मन्त्रद्रष्टा महर्षियों द्वारा किया गया है। प्रवृत्तिमार्ग की जीवनयात्रा को वेदैकवेद्य ब्रह्मानन्दमहासमुद्र के तरङ्गरूप में परिणत करने में ही मानव की सफलता है, एतदर्थ वर्ण एवं आश्रम धर्मों का विधान है। ‘धर्म अर्थ काम’ मोक्ष नामक पुरुषार्थ हैं। **अर्थ काम एवं मोक्ष का मूल धर्म है। धर्म ही त्रिगुणात्मक पञ्चतत्त्वात्मक चराचर चातुर्वर्ण्य का मूल आधार है। ‘धर्मो विश्वस्य जगतः प्रतिष्ठा’। जैसे अविद्या की विद्या द्वारा अज्ञान की ज्ञान द्वारा, निवृत्ति होती है वैसे ही अधर्म की, पाप की निवृत्ति धर्म द्वारा हो जाती है–‘धर्मेण पापमपनुदति’।**

द्विविध कर्म, प्रवृत्ति एवं निवृत्ति दोनों ही का चरमपर्यवसान भगवत्प्रीतिहेतुक है। काम्यनिषिद्धकर्मवर्जनपुरःसर नित्यनैमित्तिक कर्मानुष्ठान भगवच्चरणपङ्कजसमर्पण की मानसिकता से सम्पादित करने से भगवत्कृपा होने पर परमात्मतत्त्व का साक्षात्कार होता है। **‘आत्मदर्शन’ ही परमपुरुषार्थ है। ‘अयं तु परमो धर्मो यद् योगेनात्मदर्शनम्’।**

उपनिषद् अनादि अपौरुषेय शब्दराशि है। उसमें श्रवण मनन एवं निदिध्यासन को आत्मदर्शन का अव्यर्थ राजमार्ग घोषित किया गया है। आद्यशङ्कराचार्य का दर्शन निर्विशेषब्रह्मवाद के रूप में प्रतिष्ठित है। विशिष्टाद्वैत दर्शन में शंकराचार्य के ‘जगन्मिथ्यात्व’ का खण्डन करते हुए, जीवन में कर्म के महत्व का प्रतिपादित किया

गया है। इस दर्शन में जगत् को वास्तविक, वर्णाश्रमधर्म को अनिवार्य और भक्ति को मोक्ष का साधन माना जाता है। 'तत्त्वमीमांसा' में यह दर्शन भी अद्वैतवादी है। तदनुसार 'संसार में कोई भी तत्त्व निर्विशेष नहीं है। ब्रह्म भी 'जीव एवं जगत्' अर्थात् भोक्तृ-भोग्य विशिष्ट होने से सविशेष है। श्रुति भी कहती है— 'पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्'। सम्पूर्ण वक्तव्य सविशेषविषयक ही होते हैं। यदि ब्रह्म को निर्विशेष या निर्गुण माना जाय तो श्रुति के वाक्य उसका ज्ञान नहीं दे सकेंगे। ब्रह्म या ईश्वर की सत्ता प्रत्यक्ष एवं अनुमान से असिद्ध है। ब्रह्मविषयक ज्ञान श्रुति से ही सम्भव है। निर्विकल्पक प्रत्यक्ष का विषय भी 'निर्विशेष' नहीं होता। निर्बीजसमाधिजन्य निर्विकल्पकज्ञान भी सविशेष ही होता है र्निविशेष नहीं। किन्तु यह सविशेष ज्ञान भी शब्द से कथित नहीं हो सकता। निर्विशेषाद्वैतवादी 'आत्मा को ज्ञानाभिन्न, ज्ञानस्वरूप मानते हैं। किन्तु विशिष्टाद्वैतदर्शन में 'आत्मा' ज्ञाता है, वह धर्मभूतज्ञान से सहचरित रहता है। आत्मा स्वतः तो 'अणु' है किन्तु तद्धर्मभूत ज्ञान विभु है। मनोदशाएँ ज्ञान, सुख, दुःख आदि धर्मभूत ज्ञान के विकार या परिणाम हैं।

भक्तिमार्गीय औपनिषद दार्शनिक सम्प्रदायों में विशिष्टाद्वैतदर्शन ही 'मौलिक' तथा स्वोत्तरभावी भक्तिसम्प्रदायों की अपेक्षा अधिक महत्त्वपूर्ण है। इसे ही 'श्रीसम्प्रदाय' भी कहते हैं। स्वयं आद्य ज.गु. श्री रामानुजाचार्य अपने दर्शन को 'बोधायनवृत्ति' पर अवलम्बित घोषित करते हैं। उनके कथनानुसार यह दर्शन द्रमिड़, टंक गुहदेव और नम्मालवार की परम्परा का परिषोषक है। वस्तुतः यह सम्प्रदाय 'त्रिंशल्लक्षणवान् भागवतदर्शन तथा अन्यवैष्णवपरम्पराओं को निगमागमसम्मत आधार, तथा दर्शन की वैज्ञानिक भूमिका प्रदान करता है।

निर्विशेषाद्वैतवाद के युग की आवश्यकता के अननुरूप होने के कारण इस्लाम की एकेश्वरवादी एवं बौद्धों के वर्णजातिधर्मनिरपेक्ष

नास्तिवाद के आर्थिक एवं राजनीतिक दमनों दबाओं एवं बर्बर हिंसा को रोकने के लिए सगुण-साकार प्रेमानन्दसुधामहार्णव ही तत्कालीन युगसापेक्ष आवश्यकता थी और भारतवर्ष में बौद्धों एवं इस्लाम के संयुक्त षडयन्त्र को 'शास्त्र' एवं शस्त्र के प्रयोगों से कुण्ठित कर के वैष्णव सन्तों ने वर्णजाति-धर्ममूलक ब्राह्मणादिचाण्डालान्त 'मूल भारतीय मानव समुदाय' के त्रिवर्ग की 'दर्शन दुर्ग' तथा 'धर्म के शस्त्र' से भारत माता की रक्षा की, वह भारत की आर्थिक एवं राजनीतिक परम्परा के भगीरथरथखातावच्छिन्नप्रवाह के शैत्य पावनत्व एवं माधुर्य की प्रतिष्ठा के रक्तरंजित इतिहास में 'सूर्य एवं चन्द्र' के तुल्य अजर एवं अमर है।

'वैष्णवदर्शन एवं आचार' की प्रतिष्ठा से नास्तिकता एवं वर्णाश्रमियों की हिंसा का उग्रवेग स्तम्भित हो गया। दक्षिण में भगवान् रामानुजाचार्य एवं उत्तर में भगवान् रामानन्दाचार्य, पंजाब में गुरुतेगबहादुर सिंह, गुरुगोविन्दसिंह उनके दो अवयस्क पुत्रों जोरावर एवं निहाल सिंह, बन्दाबैरागी आदि के धर्मान्तरणविरोधी बलिदान, बुन्देलखण्ड में प्राणनाथ, छत्रसाल, उत्तरप्रदेश एवं बिहार में तुलसी, सूर, राजस्थान में मीरा, सन्त रविदास आदि की भगवत्सेवा एवं राष्ट्र सेवा से 'भारती' के चीरहरण का प्रयत्न विफल हुआ। भारत का 'ब्राह्मणादि चाण्डालान्त मानव' इन महापुरुषों को प्रातः स्मरणीय मानता तथा स्वीकार करता है। हमारी, रोटी बेटी एवं ईमान की रक्षा में इन महापुरुषों के बलिदान को कभी भी विस्मृत करना घोर कृतघ्नता ही होगी।

वैष्णव राष्ट्र एवं विश्व को भगवान् का शरीर मानता है। जीव भगवान् के शेष हैं। भगवान् ही शेषी हैं। प्राणीमात्र में भगवद्दृष्टि ही वैष्णवता है। परोपकार आस्तिकता, सर्वप्राणिसद्भाव के साथ ही धर्मग्लानि एवं अधर्माभ्युत्थाननिवृत्तिपूर्वक आगमोक्त त्रिंशल्लक्षणवान् सामान्य मानवधर्म को प्राणीमात्र में स्थापित करना श्रीवैष्णव का प्रमुख कर्त्तव्य है। श्रीराम एवं श्रीकृष्ण ब्राह्मणादि चाण्डालान्त जन-

जन के अन्तःकरण में प्रतिष्ठित हैं। ये दोनों ही शब्द ब्रह्मवाचक होते हुए भी दशरथापत्यत्वविशिष्टकौशल्यास्तनन्धय एवं यशोदास्तनन्धय में रूढ़ भी है। ब्रह्म के ये दोनों ही नाम वेदोक्त हैं। इनका रूप लीला धामादि पुराणेतिहास में वर्णित हैं। वाल्मीकि एवं व्यास ने इनके आविर्भाव, लीलाओं तिरोभावादि का सनातन यथार्थ, पुरासत्य एवं ऐतिहासिक सत्य के रूप में वर्णन किया है।

**चरणपादुका का महत्त्व**

अनन्तकोटिब्रह्माण्डनायक श्रीराम की उपासना अनादिश्रुति स्मृतिसिद्ध है। सनातन ब्रह्म के श्रीराम रूप में अवतरित होने पर उनकी लीलाओं एवं धाम का भी दिव्यावतरण शास्त्रसिद्ध है। उनके माता-पिता, वाहन, सखा, जन्म-भूमि सरयू आदि वेदोक्त एवं नित्य हैं। स्थूलदृष्टि से अनभिव्यक्त इन वेदोक्त तत्त्वों की दिव्यता का भान सन्तों महात्माओं को समय-समय पर होता ही रहता है।

श्रीमद्भागवत में क्रमिकध्यान की प्रक्रिया का रमणीय निरूपण है—

**सञ्चिन्तयेद् भगवतश्चरणारविन्दम्।**
**वज्रांकुशध्वजसुदर्शनलाञ्छनाढ्यम्।।**

श्रीराघवेन्द्र के वज्रांकुशध्वजसुदर्शनलाञ्छनाढ्य चरणारविन्द बड़े-बड़े योगीन्द्र मुनीन्द्र अमलात्मा विमलात्मा परमहंसों, अब्भक्ष वायुभक्ष, दन्तोलूखली, स्थण्डिलेशय विपिनविहरणपञ्चाननों सन्तों योगियों एवं महात्माओं की युगयुगान्तर कल्पकल्पान्तर के यमनियमासनप्राणायामध्यानधारणादियोग से निगृहीतान्तःकरण पटल पर बड़ी कठिनता से जन्मजन्मान्तर के अनन्तानन्तपुण्यपुञ्जों के उदय के फलस्वरूप निमेषमात्र के लिए ही प्रतिभासित हो सकता है। भगवच्चरणपङ्कज ही अनादिवासनाजन्य कुंण्ठाओं से सर्वथा विनिमुक्त है। वहीं से भागरथी प्रस्फुटित होकर ब्रह्मात्मैक्यादि ज्ञानविज्ञान के अधिष्ठाता देवाधिदेव भगवान् भूतभावनविश्वनाथ के कपर्द में विहार

करती हैं। वहीं से 'शूद्र' योनि की सृष्टि है। हमारे सूरि शठकोप उसी चरणारविन्दसौरभ्य के एक कण हैं। भगवच्चरणपङ्कज की नित्यसहचरी पादुका भी भगवदभिन्नस्वरूपा अत एव दिव्यातिदिव्य है। शुकदेवजी कहते हैं—

'ब्रह्मादयो बहुतिथं यदपांगमोक्षकामास्तपः समचरन् भगवत्प्रपन्नाः 'सा श्रीः स्ववासमरविन्दवनं विहाय तत्पादपंकजमलं भजतेऽनुरक्ता। अतः भगवच्चरणपादुका के भगवत्कृपामयी भरतसमाराधिता होने के कारण ही हमारे कविदार्शनिकसार्वभौम विशिष्टाद्वैतदर्शन के अशेषवाचस्पतिप्रतिम श्रीमद्'वेंकटनाथ' वेदान्तदेशिक ने 'भगवच्चरणपादुका' को अपना सर्वस्व स्वीकार करते हुए भगवान् की चरणपादुका के आधिदैविक दिव्यस्वरूप का तात्त्विक साक्षात्कार करके भागवतोत्तम जीवों के परमकल्याण की वैष्णवोचित मंगलकामना से 'पादुकासाहत्री' नामक भगवद्भावभावित 'भागवतरसप्रधान' काव्यग्रन्थ की रचना की है।

आपने भगवान् श्री राघवेन्द्र की चरणारविन्दपादुका को श्रीवैष्णवसर्वस्व मानकर दिव्य एक सहस्र लघु एवं अलघु वृत्तों में रमणीय वर्णन किया है। 'भागवत रस' प्रधान इस रचना से श्रीवैष्णवों के अन्तःकरण में श्रीराम के प्रति सर्वस्वार्पण की प्रगाढ़ प्रेमभावना सुदृढ़ होगी इसमें संशय नहीं है। भारवि, माघ एवं श्रीहर्ष की कविताओं की प्रतिस्पर्धिनी वेदान्तदेशिक की काव्यभारती का रसास्वादन सहृदय श्रीवैष्णवों को **रामारमणलम्पट** बनाने में पूर्ण समर्थ है। यह काव्य अप्राकृरसप्रधान काव्यों में उत्तमोत्तम तथा श्रीराम के प्रति अन्यथा भावों के तमस्तोमनिवृत्ति में प्रचण्डमार्त्तण्ड के समान प्रकाशस्तम्भ बने ऐसी ही श्रीवैष्णवसर्वस्वसंजीवनी भगवती विदेहतनया से प्रार्थना है।

गोविन्दाचार्यश्रीरामानुजवैष्णवदास

डॉ० गिरीश दत्त पाण्डेय

**(डॉ. गिरीशदत्तपाण्डेय)**

# श्रीमद्भगवत्पादुकासहस्रकार का संक्षिप्त परिचय

अनेक विपश्चिदभिलषणीय काव्य-नाटक-स्तोत्र-शास्त्रीयप्रकरण ग्रन्थों और रहस्यग्रन्थों के रचनाकार कवितार्किकसिंह श्रीमद्वेदान्तदेशिकस्वामीजी का आविर्भाव काञ्ची में श्रीवेङ्कटतीर्थोत्सव के दिन तेरहवीं शताब्दी में हुआ था। इनके जनक कूटस्थ विश्वामित्रगोत्रीय श्रीअनन्तसोमयाजी थे जिनके पुत्र पुण्डरीकाक्षयज्वा थे। इनके पुत्र अनन्तसोमयाजी वेदान्तदेशिकस्वामीजी के पिता थे और इनकी माता का नाम 'तोतारम्बा' था। जैसा कि कहा है—

**पिता यस्यानन्तसूरिः पुण्डरीकाक्षयज्वनः।**
**पौत्रो यस्तनयस्तोतारम्बायास्तस्य मङ्गलम्।।**

यथासमय इन्होंने अपने पिताश्री से उपनीत होकर अपने मामा आत्रेय रामानुजाचार्य से बीस वर्षों के भीतर ही साङ्ग वेदों के साथ काव्य-नाटक-अलङ्कारशास्त्र और सारे दर्शनों का अध्ययन कर लिया था। जैसा कि कहा है—

**रामानुजार्यादात्रेयाद् मातुलात् सकलाः कलाः।**
**अवाप विंशत्यब्दे यस्तस्मै प्राज्ञाय मङ्गलम्।।**

विशिष्टाद्वैत के संस्थापक श्रीभाष्यकार श्रीमद्भगवद्रामानुजाचार्य से इनके मामा अन्य थे। स्वामीजी के विषय में यह प्रसिद्ध है कि अपने मामाजी के साथ छः वर्ष की अवस्था में उनके गुरु श्रीवरदाचार्य के विद्यालय में श्रीभाष्य का प्रवचन सुनने गये थे जहाँ पर इन्होंने एक विस्मृत प्रकरण का स्मरण करा दिया था। प्रसन्न श्रीवरदाचार्य ने इन्हें इस रूप में आशीर्वाद दिया था—

**प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः।**
**भूयास्त्रैविद्यमानस्त्वं भूरिकल्याणभाजनम्।।**

इन्हें अहीन्द्रनगर में भगवान् हयग्रीव की कृपा प्राप्त हुई जिससे ये विरोधियों के मत के विदलन में निपुण हो गये। वहीं पर इनके द्वारा देवनायकपञ्चाशत्, गोपालविंशति आदि ग्रन्थों की रचना हुई। वहाँ से लौटते हुए ये गोपपुर में 'देहलीशस्तुति और सच्चरित्ररक्षा ग्रन्थों की रचना किये। एक समय वेङ्कटाद्रि में जाकर ये 'श्रीनिवास' भगवान् की अर्चना 'दयाशतक' के द्वारा किये तथा पुरुषोत्तम से लेकर वदरिकाश्रम तक दिव्यदेशों में भगवद्विग्रहों का दर्शन करते हुए विचरण करते रहे। पश्चात् काञ्ची में आकर ग्रन्थों का प्रवचन करने लगे। वहीं पर ब्रह्मोत्सव में अन्यान्य मतावलम्बियों को परास्त करके अपने मत को प्रतिष्ठापित किये। श्रीरङ्ग में भी इन्होंने शास्त्रार्थ में विपक्षियों को हराया। इसी समय इन्हें 'वेदान्ताचार्य' की उपाधि प्रदान की गयी। यही शास्त्रार्थ 'शतदूषणीग्रन्थ' के रूप में परिष्कृत हुआ जिसमें शाङ्कर मत का खण्डन है। कुछ समय बाद ये पुनः अहीन्द्रनगर चले गये और वहाँ भी विपक्षियों को शास्त्रार्थ में पराजित किया। यह शास्त्रार्थ 'परमतभङ्ग' नाम के ग्रन्थ में परिणत हुआ। वहाँ के राजा के द्वारा इन्हें 'कवितार्किकसिंह' की उपाधि प्राप्त हुई। वहाँ से ये पुनः काञ्ची आ गये। राजसम्मान प्राप्त करने के लिए इनको विजनगर के राजा का पत्र प्राप्त हुआ जिसे इन्होंने अस्वीकार कर दिया तथा पाँच श्लोकों में 'वैराग्यपञ्चक' की रचना की। यह यद्भुत श्लोकपञ्चक राजा के लिए उत्तर था। पश्चात् ये यादवाचल में पधारे जहाँ पर श्रीरामानुजाचार्य श्रीभाष्यकार का स्मारक है। 'यतिराजसप्तति' की रचना वहीं हुई। श्रीरङ्ग में पुनः इनका विवादकों से शास्त्रार्थ हुआ, ऐसा सुनने को मिलता है। वहाँ भी इन्हें विजयश्री प्राप्त हुई। संकल्पसूर्योदय की रचना इसी समय हुई।

इनको प्राप्त 'कवितार्किकसिंह' की उपाधि का पता जब डिण्डिम सार्वभौम को चला तो वे पहले विवाद की मुद्रा में आ गये किन्तु उत्तर सुनकर बाद में वे विनयपूर्वक स्वामी जी के शिष्य

बन गये। स्वामीजी को वहीं 'श्रीविष्णुघण्टा' की उपाधि प्रदान की गयी। विष्णुघण्टा के अवतार के रूप में स्वामीजी प्रसिद्ध हैं। १३२९ ईसवीय तक ये विशिष्टाद्वैतसिद्धान्त का प्रचार करते हुए श्रीरङ्ग में ही रहे।

मलिककाफूर ने १३३६ ई. में उधर आक्रमण किया था। उसके सैनिकों ने श्रीरङ्गमन्दिर को भी लूटा था। मन्दिर के प्रधान-अधिकारी श्रीसुदर्शनसूरि ने श्रीभाष्य और श्रुतप्रकाशिका व्याख्या को रक्षार्थ स्वामीजी के करकमलों में समर्पित कर दिया था। दोनों ग्रन्थों की रक्षा के लिए स्वामी श्रीवेदान्तदेशिकजी यादवाचल में आ गये। सुना जाता है कि स्वामीजी ने उक्त दोनों ग्रन्थों की रक्षा में बहुत कष्ट झेला था।

विजयनगर की राजसभा में विद्यारण्य और अक्षोभ्य नाम के दो महान् पण्डित थे। दोनों में विवाद जब हुआ तब वेदान्तदेशिक स्वामीजी को निर्णायक की भूमिका दी गयी थी। इनका निर्णय कुछ इस प्रकार सुना जाता है—

**असिना तत्त्वमसिना परजीवप्रभेदिना।**
**विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत्।।**

महाभागवतों की लीला अपरम्पार है जिसे पूर्णतः लिखना सम्भव नहीं। अनेक ग्रन्थों का निर्माण करके और श्रीमद्भगवान् में सब कुछ न्यास करके स्वामीजी १३६९ ई. में वैकुण्ठधाम में प्रस्थान किये।

### श्रीवेदान्तदेशिकस्वामीजी के ग्रन्थ

इन्होंने अनेक शास्त्रों में अनेक ग्रन्थों की रचना की है। मीमांसापादुका और सेश्वरमीमांसा, ये दो मीमांसा के ग्रन्थ हैं। वेदान्त में—१. तत्त्वमुक्ताकलाप, २. सर्वार्थसिद्धि (कलापव्याख्या), ३. शतदूषणी, ४. तत्त्वटीका, ५. न्यायपरिशुद्धि, ६. न्यायसिद्धाञ्जन, ७. परमतभङ्ग, ८. अधिकरणसारावली, ९. अधिकरण-

दर्पण, १०. चकारसमर्थन, ११. इशावास्योपनिषद्भाष्य, १२. गीतार्थसंग्रहरक्षा और १३. तात्पर्यचन्द्रिका (गीताभाष्य की टीका) आदि ग्रन्थ हैं। काव्य में—१. यादवाभ्युदय, २. हंससन्देश, ३. सुभाषितनीवी और ४. पादुकासहस्र तथा नाटक में संकल्पसूर्योदय है। धर्मशास्त्र में भी १. यज्ञोपवीतप्रतिष्ठा, २. आराधनक्रम, ३. सच्चरित्ररक्षा, ४. श्रीपाञ्चरात्ररक्षा, ५. निक्षेपरक्षा, वैश्वदेवकारिका आदि ग्रन्थ हैं। वैद्यकशास्त्र में १. रसभौभामृत और वृक्षभौमामृत ग्रन्थ हैं। शिल्पशास्त्र में 'शिल्पार्थसार' ग्रन्थ है तथा ज्योतिषशास्त्र में भी भूगोलनिर्णय ग्रन्थ इनका है। स्वामीजी ने बहुत से स्तोत्रों की भी रचना की है जिनमें—१. हयग्रीवस्तोत्र, २. दयाशतक, ३. वरदराजपञ्चाशत्, ४. अच्युतशतक, ५. देवनायकपञ्चाशत्, ६. अभीतिस्तव, ७. गरुडपञ्चाशत्, ८. श्रीस्तुति, ९. भूस्तुति, १०. रघुवीरगद्य और ११. गोदास्तुति आदि अनेक स्तोत्र उपलब्ध होते हैं। रहस्यग्रन्थों की रचनायें भी इनकी हैं। द्रविडभाषा में भी इनके साहित्य मिलते हैं।

इनका व्यक्तित्व इतना विशाल था कि हम जैसों के द्वारा उसका गुम्फन सम्भव नहीं। ऐसे महापुरुष के विषय में सोचकर या इनकी रचनाओं में अपनी दृष्टि गड़ा कर हम अपने पूरे जीवन को कृतार्थ समझते हैं। 'श्रीमद्भगवत्पादुकासहस्र' काव्यरत्न के ऊपर जो कुछ श्रम मुझे करने को मिला वह मुझे कृतकृत्य ही करता है। यह सब पूज्यपाद जगद्गुरुश्रीरामानुजाचार्यश्रीकोशलेशपीठाधीश्वर-श्रीस्वामीजी महाराज की महती कृपा मेरे ऊपर है कि मुझ जैसे प्रमादी से उन्होंने श्लाघनीय कार्य करवा लिया। सम्पादन और भूमिका का भार लेकर उन्होंने मुझ पर भूयान् उपकार किया है। काञ्चीप्रतिवादिभयङ्कर पीठ के अधीश्वर श्रीमद्भगवद्रामानुज-सत्सम्प्रदायाचार्य जगद्गुरुगादीस्वामी प्रातःस्मरणीय श्रीमत् श्रीनिवासाचार्य स्वामिपदप्रवालों का जो आशीर्वाद प्राप्त हुआ है वह

मुझे बहुत कुछ करने की प्रेरणा देता है। उनके चरणकमलों में मेरी साष्टाङ्गप्रणति है। तोताद्रिपीठ के जगद्गुरुरामानुजाचार्य श्रीमत् कलियन् वानमामलैजीयरस्वामीजी ने हृदय से जो आशीर्वाद दिया है वह मुझे अन्तिम अवस्था तक प्रफुल्लित करता रहेगा। निश्चय ही इन महापुरुषों के आशीर्वाद से मेरा जीवन सफल हुआ है। हम कृतकृत्य हैं निगमान्तदेशिक स्वामीजी के पादुकासहस्र को प्राप्त करके। सकल प्रपन्नसमुदाय इसका लाभ लेकर अपने जीवन को धन्य बनाये, ऐसी श्रीभगवान् से कामना है।

इस ग्रन्थ के प्रकाशन में **श्रीरङ्गनाथसोमानीजी** का पूरा योगदान है। श्रीमद्रामानुजसम्प्रदाय में दीक्षित आप जगद्गुरुरामानुजाचार्य कोशलेशसदनपीठाधीश्वर श्रीवासुदेवाचार्यविद्याभास्करजी महाराज के विशेष कृपाभाजन हैं। सम्प्रदाय की हर समस्याओं के समाधान में जैसे आपके पिता श्रीवासुदेव सोमानीजी ने तत्परता दिखायी है वैसे ही आराध्य जगद्गुरुओं और गुरुभूत अपने पिता से सारे संस्कारों को आत्मसात् करके अपने अन्यान्य कर्तव्यों का निर्वाह करते हुए श्रीरङ्गनाथसोमानीजी भी धर्मपथ में अग्रेसर रहते हैं। श्रीमद्भगवद्भागवतों की सेवा में परायण श्रीरङ्गनाथसोमानीजी के ऊपर श्रीरङ्गनाथपादुका की अशेषकृपा प्राप्त होती रहे और सोमानीवंश अपनी सनातनमर्यादा को लेकर चलता हुआ पूरे राष्ट्र को सुरभित करे, ऐसी भगवान् से प्रार्थना है। जगद्गुरुश्रीस्वामीजी के शिष्यों में अग्रगण्य श्रीगोविन्दाचार्य (गिरीशदत्त पाण्डेयजी) की इस महनीय कार्य में अपूर्व भूमिका रही है। इसके लिए उन्हें शतशः धन्यवाद है। अन्त में श्रीजी प्रिण्टर्स के अधिष्ठाता श्री अनूप कुमार नागर जी को भूरिशः धन्यवाद दूँगा जिन्होंने पूरी तत्परता से इस ग्रन्थ को अद्भुत रूप दिया है।

कमलाकान्त त्रिपाठी

**सुधा व्याख्याकार**

